नमः श्रीवाजिवक्त्राय विनतासूनवे नमः ।
नमामः परमर्षिभ्यो गुरुपादान् नुमः सदा ॥

# जगदीशीयायाः पञ्चलक्षण्या सिंहव्याघ्रल-क्षणयोश्च कालीशङ्करप्रणीतं क्रोडपत्रम् ।

---

आप्तजनप्रेरणावशंवदेन समयाचार्येण
श्रीपरवस्तुपदाङ्कितश्रीभट्टनाथदिग्गजवंशजेन
वेंकटपदलक्ष्मणा आर्यवरगुरुणा
श्रीमदाचार्यभट्टनाथस्वामिना
संशोधितम् ।

---

वाराणसीवास्तव्येन संस्कृतविद्याविनोदिना
श्रीहरिदासगुप्तमहाशयेन
स्वकीय 'विद्याविलास' यन्त्रे मुद्रितम्
प्राकाश्यं प्रापितं च ।

---

१९०३ मिते ख्रीस्तशके ।

---

श्रीहयग्रीवाय नमः ।
श्रीपक्षिराजाय नमः ।
नमः परमर्षिभ्यः ।

# जागदीश्याः पञ्चलक्षण्याः क्रोडपत्त्रम् ।

## कालीशङ्करनिर्मितम् ।

---

अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिरिति शिरोमणिः ॥ कपिसंयोगी गगनादित्यादावव्याप्तिवारणाद्वृत्तिमद्धेतावव्याप्त्यर्थं सत्पदम् ॥ अथैवमपि कपिसंयोगाभाववान् गुणत्वादित्यादावव्याप्तिर्न संभवतीति कथमव्याप्यवृत्तिसाध्यकसद्धेतुत्वावच्छेदेनाव्याप्तिरुक्ता, न चाव्याप्यवृत्ति साध्यं यत्रेति व्युत्पत्त्या तत्र सन् वर्तमानो यो हेतुस्तत्राव्याप्तिरिति वाच्यम् तथा सति अव्याप्यवृत्तिसाध्यके हेतुरिति समासेनैव गगनहेतुनिराकरणे सत्पदवैयर्थ्यापत्तेः संयोगाभावसाध्यकद्रव्यत्वहेतावव्याप्तिसंभवेऽपि द्वितीयलक्षणेऽपि तद्वारणायोगात् । मैवम् । केवलान्वयिभिन्नाव्याप्यवृत्तिसाध्यकसद्धेतुत्वावच्छेदेनाव्याप्तिवारणार्थं द्वितीयलक्षणप्रणयनात् ॥ १ ॥ साध्यवच्छिन्नश्चासौ साध्याभाववांश्चेति कर्मधारये साध्याभावपदवैयर्थ्यापत्तेः सप्तमीसमासः कृतः न च तत्रापि साध्यवच्छिन्नेऽभाव इत्यास्तां किं साध्यपदेन

ऽधिकरणभेदेनाभावभिन्नत्वमतेनैवैतल्लक्षणाकरणा-
द्गगनाभावादिकमादायाव्याप्तिविरहादिति वाच्यम्
स्वप्रतियोगितावच्छेदकसंबन्धेन साध्यवद्भिन्ने वर्तते
यः समवायसंबन्धावच्छिन्नवह्न्यभावस्तद्वति हेतोर्ह्र-
त्तितयाऽव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धा-
वच्छिन्नप्रतियोगितालाभाय साध्यपदमिति जग-
दीशः ॥ अत्रेयमाशङ्का एवं सति स्वप्रतियोगिताव-
च्छेदकसंबन्धेन साध्यवद्भिन्नो यः साध्याभाववा-
निति कर्मधारयः कथं परित्यक्त इति चेत्,
सप्तमीसमासपक्षे स्वप्रतियोगितावच्छेदकसंबन्धेन
साध्यवद्भिन्ने यः साध्यताघटकसंबन्धावच्छिन्नसाध्य-
तावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्तद्वद्वृत्ति-
त्वमेव वाच्यम् अन्यथा साध्यताघटकसंबन्धावच्छि-
न्नप्रतियोगिताकाभावमात्रनिवेशे घटभिन्नस्य ता-
दात्म्येन साध्यत्वे पटत्वादिहेतौ द्रव्यत्वात्मकं द्र-
व्यभिन्नभेदमादायाव्याप्त्यापत्तेः । तद्भिन्नाभावस्याति-
रिक्तत्वेपि तद्भिन्नभेदस्य तत्स्वरूपत्वोपगमात् ।
कर्मधारयपक्षे तु साध्यतावच्छेदकावच्छिन्नप्रतियो-
गिताकत्वनिवेशवैयर्थ्यमिति धेयम् ॥ केचित्तु क-
र्मधारयपक्षेऽभावत्वेनाभावप्रवेशवैयर्थ्यं साध्यताघ-
टकसंबन्धावच्छिन्नप्रतियोगिताकत्वमात्रेणाभावनिवे-
शस्यैव सम्यक्त्वात् सप्तमीसमासपक्षे तु एकध-

मविच्छिन्नाधिकरणत्वस्यैक्यमते साध्यवद्भिन्नवृत्ति-साध्यतावच्छेदकसंबन्धावच्छिन्नद्रव्यत्वावच्छिन्न-निरूपकताकाधिकरणतामादाय वन्हिमान् धूमा-दित्यादावव्याप्तिवारणायाभावत्वेनाभावनिवेशः न च पूर्वोक्ताधिकरणतायाः साध्यतावच्छेदकसंबन्धाव-च्छिन्ननिरूपकताकत्वेऽपि तादृशप्रतियोगिताकत्वं नास्तीति वाच्यम् निरूपकताया अपि संवन्ध-प्रतियोगित्वाभिन्नत्वात् न चाभावीयाधिकरण-त्वीयप्रतियोगित्वयोरेकजातीयत्वमप्रामाणिकमिति वाच्यम् तयोरेकजातीयत्वस्य केवलान्वयिग्रन्थे भ-ट्टाचार्यैणोक्तत्वादित्याहुः॥ उच्छृंखलास्तु साध्यवद्भि-न्नस्यासौ साध्याभावस्येति कर्मधारयः तत्र साध्यवत्त्वं स्वप्रतियोगिकत्वस्वसामानाधिकरण्योभयसंवन्धेन एवं च प्रतियोगितायां साध्यतावच्छेदकसंबन्धाव-च्छिन्नत्वं साध्यतावच्छेदकावच्छिन्नत्वं च न देयम् सामानाधिकरण्यमात्रस्य संबन्धत्वे घटाभावादेरपि तादृशसंबन्धेन साध्यवत्तया तमादायाव्याप्तिविरहेण साध्याभावेत्यत्र साध्यपदवैयर्थ्यापत्तेः स्वप्रतियोगिक-त्वमात्रस्य संबन्धत्वे तादृशसाध्यवद्भिन्नसाध्याभावा-प्रसिद्धिरतो द्वयमुपात्तम् विशिष्टसत्तावान् जातेरि-त्यादावतिव्याप्तिवारणाय सामानाधिकरण्यसंव-न्धमप्रहाय स्ववृत्तिसाध्यतावच्छेदकावच्छिन्नसा-

सानाधिकरण्यसंबन्धो निवेश्य इत्याहुः ॥ तच्च सा-
ध्यपदसार्थक्याय स्वप्रतियोगिकत्वघटितसंबन्धा-
नुधावनं प्रक्षालनाद्धीत्यादिन्यायेनायुक्तम् सामाना-
धिकरण्यसंबन्धेनैव साध्यवत्त्वविवक्षणे दोषा-
भावात् विशिष्यवत्ताविशेषसंबन्धेनाभावधिकरणत्वं
सामानाधिकरण्यघटकवृत्तित्वं च वक्तव्यं सर्वत्रगग-
नघटितोभयाभावं व्यधिकरणसंबन्धेन साध्याभावं वि-
पक्षमात्रवृत्त्यभावं चादायाव्याप्तिवारणसम्भात् अधि-
करणभेदेनाभावभेदादिति ॥ २ ॥ सकलेति ॥ साक-
ल्यं साध्याभाववति साध्ये च बोध्यमित्यत्र साध्या-
भाववति साकल्यविशेषणे दत्ते एव साध्ये साकल्यवि-
शेषणं सार्थकमतः प्रथमतः साध्याभाववति साकल्य-
विशेषणमिति प्राञ्चः तन्न मनोरमम् विपक्षे सा-
कल्याभावेऽपि गगनावृत्तिधर्मवान् द्रव्यत्वादित्या-
दावतिव्याप्तेरेव साध्ये साकल्यनिवेशप्रयोजकत्वसिद्धे-
रिति जगदीशः ॥ ननु साकल्यविशेषणे दत्ते-
ऽपि गगनत्वसाध्योभयाभावमादायातिव्याप्तिरिति
चेन्न । इदानीं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं प्र-
तियोगितायामस्तीत्यभिप्रायात् ॥ अत्रेदं तत्त्वम् ।
साध्ये साकल्यविशेषणस्य वास्तवफलं यदव्याप्तिवा-
रणं तदत्र न संभवतीति प्राचामाशयः । विपक्षे
साकल्येनवारयितुमशक्यस्यैव साध्ये साकल्यवास्त-

वफलत्वात् । न च गगनेतद्रूपोभयत्वान् तद्रसा-
दित्यादौ साध्याभाववति साकल्यविशेषणे दत्तेऽपि
नच साध्यप्रतियोगिकस्य एतद्रूपाभावस्याधिकरणे
हेतोरभावात् गगनेतद्रूपोभयत्वावच्छिन्नाभावस्य
प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाप्रसिद्धा प्र-
तिवैयधिकरणस्यैव दौर्लभ्याच्च संभवन्त्यतिव्या-
प्तिः साध्ये साकल्यदाने तादृशसकलसाध्यप्रति-
योगिकाभावाप्रसिद्ध्यैव वार्यत इति साध्ये साक-
ल्यविशेषणस्य फलमपि वास्तवमतिव्याप्तिः प्रथमतः
संभवतीति वाच्यं तत्र साध्ये साकल्यविशेषणासत्त्वेऽपि
एतद्घटावृत्तित्वावच्छिन्नाभावं एतद्रूपगगनान्यतरा-
भावं चादायातिव्याप्तिवारणासंभवेन तस्य वास्तवफ-
लत्वाभावात् ॥ वस्तुतस्तु साध्याभाववतीत्युक्ता सा-
ध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगि-
ताको ग्राह्य इत्युक्तौ साध्याभावो वेत्यनेन साध्याभा-
ववति साकल्यविशेषणस्यातिसान्निध्येन तेन सहैव
वैकल्पिकसंशयः स्यात् स च नाभीष्टः अतः साध्या-
भाववति साध्ये चेत्युक्तमिति गदाधरभट्टाचार्याः ॥२॥
अथ हेतुतावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणा-
भावीयप्रतियोगित्वापेक्षया प्रतियोगितावच्छेदका-
वच्छिन्नप्रतियोगिव्यधिकरणाभावीयहेतुतावच्छेद-
कावच्छिन्नप्रतियोगित्वनिवेशनं यद्यपि गुरु । त-

थापि यथासंनिवेशे न वैयर्थ्यम् । वस्तुतः साध्या-
भाववत्सकलनिष्ठहेतुतावच्छेदकावच्छिन्नस्वप्रतियो-
ग्यनधिकरणताकाभावप्रतियोगित्वापेक्षया हेतुता-
वच्छेदकावच्छिन्नयादृशप्रतियोगितावच्छेदका-
वच्छिन्नानधिकरणत्वं साध्याभाववतस्तद्वत्त्वं न
गौरवग्रस्तमिति तन्नोक्तम् । न चास्याक-
मपि यद्धर्मावच्छिन्नानधिकरणत्वं साध्याभाववतस्त-
द्धर्मवत्त्वरूपफलितार्थस्य तदपेक्षया लाघवमिति वा-
च्यम् तथा सति व्याप्तेः प्रतियोगित्वरूपत्वानुपपत्त्या
मूलासंगतेः ॥४॥ सकलस्य साध्यप्रतियोगिकाभावस्या-
धिकरणाप्रसिद्ध्या व्यभिचारिण्यतिव्याप्तिवारणार्थं
यदि साध्याभावस्य विशेषणं यावत्त्वं तदा वह्निमान्
धूमादित्यादावव्याप्तिस्तत्रापि सपक्षवृत्तित्वावच्छि-
न्नाभावस्य तत्तद्विपक्षावृत्तित्वावच्छिन्नाभावस्य च सा-
ध्याभावस्तोमस्याधिकरणाप्रसिद्धेरत आह साकल्यं
साध्याभाववतीति जागदीशी ॥ अत्रायं भावः तत्रोक्त-
साकल्यविशेषणं किंदोषवारणाय कुत्र देयमित्या-
शङ्कायां गगनावृत्तिधर्मवान् द्रव्यत्वात् इत्यत्रातिव्या-
प्तिवारणाय साकल्यस्य साध्यांशे विशेषणत्वे धू-
मवान्वह्नेरित्यादावतिव्याप्तिवारणासंभव इति स-
र्वत्रातिव्याप्तिवारणार्थं साध्याभाव एव तद्विशेषणं दे-
यमिति व्यभिचारवारणे तुल्ययुक्त्या सकलसाध्याभा-

ण्याधिकरणाप्रसिद्ध्याऽव्याप्तिरित्यप्रसिद्धिनिबन्धनाव्याप्तिवारणाय साकल्यं प्रथमतः साध्याभाववतिविशेषणं न तु साध्य इति ॥ नच साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य लक्षणे निवेशनीयतया तद्रूपावृत्तिनीलत्वाद्यभावमादाय कथमव्याप्तिरिति वाच्यम् । अभावद्वये प्रतियोगिवैयधिकरण्यावच्छिन्नत्वस्यावश्यं निवेशनीयतया समवायादिसंबन्धावच्छिन्नप्रतियोगिताकाभावमादाय दोषाभावादेतल्लक्षणे तस्यानिवेशनीयत्वादन्यथा धूमवान्वह्नेरित्यादौ संयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य गुणादाविव सत्त्वादप्रसिद्ध्यभिधानस्योन्मत्तप्रलापत्वापत्तेः ॥ अथ वा धूमवान् वह्नेरित्यादावतिव्याप्तिवारणार्थं साध्याभावाधिकरणे साध्यतावच्छेदकसंबन्धेन किंचिद्धर्मवत्त्वस्य विशेषणीयतया संयोगसंसर्गेण च घटावृत्तित्वावच्छिन्नाभावपटावृत्तित्वावच्छिन्नाभावरूपसाध्याभावस्तोमस्याधिकरणे गुणादौ किञ्चिद्धर्मवत्त्वाप्रसिद्ध्याव्याप्तेर्दुर्वारत्वात् । अथ प्रागुक्तयुक्त्याऽसंभवेऽव्याप्त्यभिधानमसंगतं न च तद्घटभिन्नं पटत्वादित्यादावेव लक्षणगमनसंभव इति वाच्यम् तथापि घटभेदत्वावच्छिन्नभेदत्वावच्छिन्नाभावरूपसाध्याभावस्तोमस्याधिकरणाप्रसिद्धेर्दुर्वारत्वात् न च भेदत्वावच्छिन्नाभावस्य प्रतियोगित्वं घटादिभेदे स्वो-

क्रियते न तु तस्य प्रतियोगित्वं साध्येऽपीति वाच्यम् तावत्पर्यन्तानुधावने धूमवान्वह्नेरित्यादौ घटाद्यवृत्तित्वावच्छिन्नाभावस्य प्रतियोगित्वं घटादिभेदे स्वीक्रियते न तु प्रतियोगित्वं धूमादावप्यतः साध्याभावे साकल्यकल्पेऽपि दोषो नास्तीति चेन्नैवम् पटाद्यवृत्तिधर्मवान् घटत्वादित्यादौ लक्षणस्यान्वयसंभवान्नासंभव इति । न च तत्रापि पटभेदत्वावच्छिन्नाभावस्य तत्तत्पटाद्यवृत्तिधर्माभावस्य च साध्याभावस्तोमस्याधिकरणाप्रसिद्धेरव्याप्तिसंभव इति वाच्यम् । तादृशाभावस्य यावत्साध्यप्रतियोगिकत्वविरहेण साध्याभावे यावत्साध्यप्रतियोगिकत्वविवक्षया तद्वारणात् । न च पटावृत्तिधर्माभावतत्पटानुयोगिकसंबन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावोभयात्मकसाध्याभावस्तोमस्याधिकरणाप्रसिद्धेरव्याप्तिसंभव इति वाच्यम् । विशेषणरूपेण संसर्गत्वास्वीकारे तदभावात् ॥ केचित्तु साध्ये साकल्यविशेषणदानेऽप्युभयपक्षे नित्यज्ञानानुयोगिकविषयित्वसंबन्धावच्छिन्नप्रतियोगिताकघटाभावे साध्ये पटत्वादिहेतौ लक्षणगमनान्नासंभवस्तत्र साध्याभावस्याधिकरणत्वस्य नित्यज्ञाने सत्त्वादिति वदन्ति ॥ ५ ॥ प्रतियोगिवैयधिकरण्यावच्छिन्नसाध्याभावव्यापकतावच्छेदकं प्रतियोगिवैयधिकरण्याव-

च्छिन्नयद्धर्मावच्छिन्नाभाववत्त्वं तद्धर्मवत्त्वं व्याप्तिरित्युक्तौ तु न कोऽपि दोष इति ध्येयम् इति जगदीशः ॥ नन्वत्र कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिवारणाय साध्याभावे प्रतियोगिवैयधिकरण्यस्य सार्थक्येऽपि हेत्वभावे प्रतियोगिवैयधिकरण्यमनर्थकमेव न चैतद्वृक्षत्ववान् कपिसंयोगादित्यादावतिव्याप्तिवारणाय तदिति वाच्यम् तत्र साध्याभाववति जलादौ कपिसंयोगाभावस्य सत्त्वेपि तदवच्छिन्नाभावस्यापि तत्र सत्वात्तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपसाध्याभावव्यापकत्वस्य हेत्वभावेऽभावादिति चेन्न । द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणाय प्रतियोगिवैयधिकरणस्य व्यापकताशरीरे देयत्वात् । अन्यथा द्रव्यत्वाभाववति गुणादौ विशिष्टसत्त्वाभावत्वावच्छिन्नाभावस्य सत्तास्वरूपतया तस्य तत्र सत्त्वेन विशिष्टसत्ताभावत्वस्य व्यापकतावच्छेदकत्वविरहादव्याप्तेः । अधुना तु प्रतियोगिवैयधिकरण्यावच्छिन्नाभावस्य व्यापकताशरीरे निवेशनीयतया गुणादौ विशिष्टसत्त्वाभावस्याभावसत्त्वेऽपि तादृशाभावप्रतियोगिनो विशिष्टसत्त्वाभावस्यापि सत्त्वेन तद्दोषवारणेऽपि एतद्वृक्षत्ववान् कपिसंयोगादित्यादावतिव्याप्तिर्दुर्वारैवेति तद्वारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यावच्छिन्नत्वविशेषणमवश्यं नि-

वेशनीयमिति ध्येयम् ॥ इदं तु यथाश्रुते । अन्यथा साध्याभाववन्निष्ठाधिकरणतानिरूपकतावच्छेदकानुयोगितानिरूपितप्रतियोगितया अवच्छेदकत्वाभावस्य तादृशाभावत्वे निवेशनीयतयैव द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणासंभवे व्यापकताशरीरे प्रतियोगिवैयधिकरण्यमनादेयमिति ध्येयम् ॥ केचित्तु व्यापकताघटकीभूताभावस्य साध्याभाववद्वृत्तित्वं यदि येन केनापि संबन्धेन तदा वन्हिमान् धूमादित्यादावव्याप्तिः वन्ह्यभाववति कालादौ कालिकसंबन्धेन धूमाभावाभावस्य सत्त्वात् नापि हेतुतावच्छेदकसंबन्धेन सत्तावान् जातेरित्यादौ सत्ताभाववति सामान्यादौ प्रकृतहेतुतावच्छेदकसंबन्धेन वृत्तित्वाप्रसिद्धेः नापि हेतुतावच्छेदकसंबन्धान्यहेतुप्रतियोगिकसंबन्धातिरिक्तसंबन्धेन सत्तावान् समवायेन प्रमेयादित्यादावव्याप्तेस्तत्र समवायस्यैव निरुक्तसंबन्धतया साध्याभाववति सामान्यादौ तेन संबन्धेन वृत्तेरप्रसिद्धेः एतेन हेतुतावच्छेदकसंबन्धेन वर्तमानहेतुप्रतियोगिकान्यसंबन्धेन वृत्तित्वनिवेशान्न कोपि दोष इत्यपि निरस्तम् निरुक्तस्थले स्वरूपसंबन्धस्यापि तथात्वात् साध्याभाववति सामान्यादौ तेन संबन्धेन प्रमेयरूपहेत्वभावाभावस्य वृत्तेरिति नापि हेतुतावच्छेद-

कस्वरूपान्यतरसंबन्धेन घटत्वान् प्रमेयत्वादित्यादौ घटानुयोगिकस्वरूपसंबन्धेन हेतुतायामव्याप्तेस्तत्र साध्याभाववत्पटादौ स्वरूपसंबन्धेन हेतोर्वृत्तेः अतो येन केनापि संबन्धेन वृत्तित्वे निवेशिते वन्हिमान्धूमादित्यादावव्याप्तिवारणार्थं व्यापकताशरीरे प्रतियोगिवैयधिकरण्यस्यावश्यं निवेशनीयत्वात् तन्निवेशे च हेत्वभावे एतद्वृतत्ववान् कपिसंयोगादित्यादावतिव्याप्तिवारणार्थं प्रतियोगिवैयधिकरण्यावच्छिन्नत्वस्यावश्यकत्वमिति वदन्ति ॥६॥ निर्धूमत्वव्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादावव्याप्तिः तत्र हेत्वाभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वादिति शिरोमणिः। अथ तत्र निर्धूमत्वव्याप्याभाववति पर्वतमहानसादौ वह्न्यभावाभावस्य वन्हिस्वरूपस्य यावद्विपक्षावृत्तित्वेपि वन्ह्यभावभेदस्य यावद्विपक्षवृत्तित्वसंभवान्नाव्याप्तिः न चात्यंताभाव एव सकलसाध्याभाववन्निष्ठो निवेश्यः तदनिवेशे धूमवान् वन्हेरित्यादावतिव्याप्तिरयोगोलके वन्हिभेदसत्त्वादिति वाच्यम् धूमाभाववति वन्ह्यादौ वन्हिभेदासत्त्वेनातिव्याप्तेरनवकाशादिति चेत्। अत्र केचिदाहुः वन्ह्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्यवान् वन्ह्यभावान्यत्वविशिष्टनिर्वन्हित्वादित्यादावव्याप्तिस्तत्र साध्याभाववति वन्ह्यभावे वन्ह्यभावभेदात्मकहेतुभेदस्यासत्त्वात् पर्वतादौ च वन्ह्यात्मकहेत्वभावस्य यावद्विपक्षावृत्तित्वादिति न

च वन्ह्यभावान्यत्वविशिष्टवन्ह्यभावाभावो न वन्हिस्वरूपः किं त्वतिरिक्त एवान्यथा वन्ह्यभावे विशिष्टाभावबुद्ध्यनुदयप्रसङ्ग इति वाच्यं प्रतियोगितासंयोगान्यतरसंबन्धेन वन्हिनैवोपपत्तौ अतिरिक्ताभावानभ्युपगमादिति ॥ अत्रेदं चिन्त्यम् । भवतु विशिष्टाभावो वन्हिस्वरूपः तथापि वन्ह्यभावत्वस्य संयोगेनैव वन्ह्यभावाभावप्रतियोगितावच्छेदकत्वसंभवान्नाऽव्याप्तिः । न च संयोगसंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावभेदात्मकहेतुभेदो नास्त्येव तादृशात्यंताभावप्रतियोगितावच्छेदकं च लाघवादभावत्वमिति तत्रापि हेतुतावच्छेदकस्य प्रतियोगितानवच्छेदकत्वादव्याप्तिरिति वाच्यम् विषयतासंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावान्यत्वविशिष्टवन्ह्यभावाभावस्य साध्याभाववति सर्वस्मिन्नेव संभवादव्याप्त्यभावात् । एवं च धूमाभावव्याप्यवान् वन्ह्यभावादित्यत्र हेतुतावच्छेदकविशेषणताविशेषसंबन्धेन प्रतियोगिव्यधिकरणविषयितासंबन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावाभावस्य यावद्विपक्षे सत्वान्नाऽव्याप्तिरिति ॥ अत्र केचित् वृत्त्यनियामकस्य व्यधिकरणसंबन्धस्य वा प्रतियोगितावच्छेदकत्वानङ्गीकारेण तत्राऽव्याप्तिरित्यभिप्रायेणायं ग्रन्थ इति ॥ ७ ॥

जागदीशपञ्चलक्षण्याः कालीशङ्करकृता पत्रिका समाप्ता ।

## अथ जागदीश्याः सिंहव्याघ्रलक्षणयोः
## कालीशांकरी प्रारभ्यते ॥



साध्यनिष्ठासमानाधिकरण्यप्रतियोगित्वानधिक-रणात्वमित्यस्य साध्यनिष्ठाभावप्रतियोग्याधेयतानि-रूपकाधिकरणवृत्तित्वानधिकरणत्वमिति पर्यवसि-तार्थे वन्हिमान् धूमादित्यादौ महानसीयवन्ह्यादिनि-ष्ठाभावप्रतियोग्याधेयतानिरूपकाधिकरणपर्वतादिवृ-त्तित्वस्य धूमे सत्त्वादव्याप्तिरिति साध्यसामान्यनि-ष्ठाभावप्रतियोगीत्येवं वक्तव्यम् सामान्यपदस्य व्याप-कत्वार्थकत्वात्तन्निवेशेऽतिगौरवमतः कल्पान्तरमिति जगदीशेनोक्तम् ॥ ननु साध्यसामान्यनिष्ठाभावेत्या-दिकल्पे साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतानि-वेशस्यावश्यकत्वम् अन्यथा समवायसंबन्धावच्छि-न्नपर्वतवृत्तित्वाभावमादाय वन्हिमान् धूमादित्या-दावव्याप्तिः तथा च द्रव्यवान् धूमादित्यादाव-व्याप्तिः साध्यसामान्यनिष्ठाभावप्रतियोगिसाध्यताव-च्छेदकसंबन्धावच्छिन्नाधेयत्वाप्रसिद्धेः एवं वन्हिमान् पर्वतरूपान्यतरत्वात् इत्यादावतिव्याप्तिः तथा हि सा-ध्यनिष्ठाभावप्रतियोगि यत्साध्यतावच्छेदकसंबन्धाव-च्छिन्नाधेयत्वं तन्निरूपकह्रदादौ तादृशान्यतरत्वस्या-

सत्त्वात् । अत्र केचित् साध्यसामान्यनिष्ठाभावीयसा-
ध्यतावच्छेदकसंबन्धावच्छिन्नाधेयत्वसंबन्धावच्छिन्नप्र-
तियोगिताश्रयनिरूपितवृत्तित्वस्यानधिकरणत्वमेव
निष्कृष्टदलार्थः तथा च पर्वतादौ वह्निनिष्ठाभावप्र-
तियोगित्वाभावान्नाव्याप्तिः अत्र यद्यप्येतादृशसंबन्धस्य
वृत्त्यनियामकतया तत्संबन्धावच्छिन्नप्रतियोगित्वाप्र-
सिद्ध्याऽसंभवापत्तिः तथापि साध्यतावच्छेदकसंबन्धा-
वच्छिन्नत्वसाध्यनिष्ठत्वोभयाभाववत्त्वस्याधेयतायां नि-
वेशेन पूर्वोक्तदोषानवकाश इत्याहुः । न च वह्नि-
मान्धूमादित्यादौ समवायसंबन्धावच्छिन्नपर्वताधेयत्व-
स्यापि तथात्वेनाव्याप्त्यापत्तिरिति वाच्यम् । साध्यता-
वच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वसाध्यतावच्छे-
दकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिक-
रणतावन्निरूपितत्वोभयाभाववदाधेयत्वस्यैव विवक्षि-
त्वात् न कोऽपि दोषः । न च तथापि समवायेन प्रमे-
यसाधकसत्त्वादिहेताव्याप्तिः प्रमेयसामान्यनिष्ठा-
भावप्रतियोगितादृशाधेयत्वस्याप्रसिद्धेरिति वाच्यम् ।
सामान्यपदस्य व्यापकत्वार्थकत्वेन साध्यतावच्छेद-
कसंबन्धप्रतियोग्यनुयोगिकसाध्यतावच्छेदकताघ-
टकसंबन्धेन साध्यतावच्छेदकस्य व्यापकत्वनिवेशान्न
दोष इति ध्येयम् ॥ अत्रेदं चिंत्यम् आधेयभेदेनाधेय-
ताया भिन्नत्वात्तद्वह्निमान् तद्धूमादित्यादावव्याप्तिः

तद्वन्हिनिष्ठो योऽभावस्तत्प्रतियोगि यत्तद्धूमनिष्ठा-
धेयत्वं तन्निरूपकाधिकरणं यत्तद्धूमाधिकरणं तद्वृ-
त्तित्वानधिकरणत्वस्य तद्धूमेऽसत्त्वात् न च यन्निरू-
पितवृत्तित्वसामान्याभावः साध्ये तन्निरूपितवृत्तित्वा-
नधिकरणत्वमेव हेतौ व्याप्तिः तथा च वह्नौ तद्धूमा-
धिकरणनिरूपितवृत्तित्वसामान्याभावो नास्तीति य-
त्पदेन तद्धूमाधिकरणं धर्तुं न शक्यते किं तु ह्रदा-
दिकमेव तन्निरूपितवृत्तित्वानधिकरणत्वं तद्धूमे-
ऽस्तीति वाच्यम् एवं सति धूमवान् वन्हेरित्यादौ
धूमे ह्रदनिरूपितवृत्तित्वसामान्याभावस्य सत्त्वाद्यत्प-
देन ह्रदं धृत्वा तन्निरूपितवृत्तित्वानधिकरणत्वस्य
वन्हौ सत्त्वादतिव्याप्तेः सुवचत्वात् न च यद्यन्निरू-
पितवृत्तित्वाभावः साध्ये तत्तन्निरूपितवृत्तित्वान-
धिकरणत्वमेव हेतौ विवक्षणीयं तथा च धूमे अ-
योगोलकनिरूपितवृत्तित्वाभावोऽप्यस्ति तन्निरू-
पितवृत्तित्वानधिकरणत्वं च वन्हौ नास्तीति नाति-
व्याप्तिरिति वाच्यम् एवं सति यदधिकरणानधिक-
रणं साध्यमिति पूर्वव्याख्यायां धूमवान् वन्हेरित्यत्रा-
तिव्याप्तिवारणार्थं यद्यत्पदप्रवेशे गौरवमिति दानं
जगदीशस्य विरुध्येत यद्यत्पदप्रवेशस्यावश्यकत्वादि-
ति ॥ १ ॥ अत्र साध्यनिष्ठाभावप्रतियोग्याधेयता-
निरूपकाधिकरणवृत्तित्वानधिकरणत्वमिति परि-

च्छृते साध्यनिष्ठसामानाधिकरण्यप्रतियोगित्वेत्या-
दिकल्पे वन्हिमान् धूमादित्यादौ विषमव्याप्त-
हेतावव्याप्तिः महानसीयवन्हौ पर्वतनिरूपित-
वृत्तित्वाभावो वर्तते तत्प्रतियोगि पर्वतनिरूपि-
तवृत्तित्वम् तन्निरूपकाधिकरणं पर्वतः तन्निरूपित-
वृत्तित्वमेव धूमेऽस्ति न तदनधिकरणत्वमितीति
जगदीशेनोक्तम् ॥ अत्र आर्द्रेन्धनप्रभववन्हिमान्धूमा-
दित्यादिसमव्याप्तहेतावप्यव्याप्तिः संभवति महान-
सीयवन्ह्यात्मकार्द्रेन्धनप्रभववन्हौ वर्तमानो यः पर्व-
तवृत्तित्वाभावस्तत्प्रतियोगि यत्पर्वतवृत्तित्वं तन्नि-
रूपकाधिकरणवृत्तित्वस्य पर्वतीयधूमे सत्त्वात् नच श-
ब्दवान् गगनत्वात् इत्यादिसमव्याप्तहेतौ नाव्याप्तिः
संभवति शब्दे गगनवृत्तित्वाभावविरहात् तथा च स-
मव्याप्तत्वावच्छेदेनाव्याप्तिर्न संभवतीति विषमव्या-
प्तानुधावनमिति वाच्यं यतो हि सत्ताद्रव्यत्वान्यतरवा-
न् द्रव्यत्वादित्यत्र विषमव्याप्तावप्यव्याप्तेरसंभवः स-
त्तायां द्रव्यत्वे वा द्रव्यत्वासामानाधिकरण्यविरहात्
तथा च विषमव्याप्तत्वावच्छेदनाप्यव्याप्त्यसंगति-
रिति चेत् । अत्राहुः साध्यनिष्ठाभावेत्यादि परि-
ष्कारेऽस्त्येव पूर्वोक्तासङ्गतिः वस्तुत इत्यादि नो-
क्ते साध्यनिष्ठसामानाधिकरण्यसंबन्धावच्छिन्ना-
भावेत्यादिकल्पे आर्द्रेंधनप्रभववन्हिमान् धूमादित्या-

द्विषमव्याप्तौ आर्द्रेन्धनप्रभववन्हौ सामानाधिकरण्यसंबन्धावच्छिन्नप्रतियोगिताकधूमसामान्याभावो नास्तीति नाव्याप्तिः वन्हिमान् धूमादित्यत्र विषमव्याप्ते यत्र साध्ये हेतु व्यभिचारस्तदधिकरणावच्छेदेन सामानाधिकरण्यसंबन्धावच्छिन्नप्रतियोगिताकहेतुसामान्याभावसत्त्वात् ध्रुवसमव्याप्तिः समव्याप्ते साध्ये हेतुव्यभिचार एव नास्ति कुतस्तदवच्छेदेन साध्ये सामानाधिकरण्यसंबन्धावच्छिन्नप्रतियोगिताकहेतुसामान्याभावसत्त्वमिति । तदयुक्तम् । तथा सति वन्हिनिष्ठस्य सामानाधिकरण्यसंबन्धेन तत्तद्धूमाभावस्य प्रतियोगित्वाधिकरणत्वस्य तत्तद्धूमे सत्त्वात् आर्द्रेन्धनप्रभववन्हिमान् धूमादित्यादावव्याप्तेर्दुर्वारत्वात्। तादृशसंबन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगितानवच्छेदकहेतुतावच्छेदकवत्त्वमिति विवक्षयाऽव्याप्तिवारणेऽपि धूमवान् वन्हेरित्यादावतिव्याप्त्यापत्तेः ॥ वस्तुतो विषमव्याप्तत्वं व्यधिकरणाहययवृत्तिसाध्यतावच्छेदकत्वमिति नानुपपत्तिरिति ध्येयम् ॥ केचित्तु स्वासमानाधिकरणसाध्यकहेतोरेव विषमव्याप्तपदेन विवक्षिततया आर्द्रेन्धनप्रभववन्हिमान् धूमादित्यादौ विषमव्याप्तत्वं न तु शब्दवान् गगनत्वात् सत्ताद्रव्यत्वान्यतरवान् द्रव्यत्वादित्यादावित्याहुः ॥ २ ॥ साध्यनिष्ठाभेयत्वानिरूपका-

धिकरणावृत्तित्वानधिकरणत्वमित्यत्र साध्यनिष्ठाधेय-
त्वं साध्यतावच्छेदकसंबन्धावच्छिन्नं बोध्यं अन्यथा
समवायेन रूपवान् महाकालत्वादित्यादौ व्यभिचा-
रिण्यतिव्याप्तिरिति जगदीशः ॥ यद्यपि कालिकसंब-
न्धावच्छिन्नरूपनिष्ठाधेयतानिरूपकाधिकरणत्वस्यैव
महाप्रलये सत्त्वात् संबन्धसामान्येन रूपनिष्ठाधेय-
त्वानिरूपकाधिकरणत्वं न महाप्रलये किं तु गग-
न एव तन्निरूपितवृत्तित्वानधिकरणत्वं च कालत्व-
त्वेतावपि तथा च तत्रैवातिव्याप्तिसंभवे महाकालत्व-
पर्यन्तानुधावनं व्यर्थम् तथापि यादृशव्यभिचारिमात्र
एवाधेयतायां साध्यतावच्छेदकसंबन्धानिवेशेऽतिव्या-
प्तिस्तादृशहेतुः महाकालत्वमेव न तु केवलं कालत्व-
म् । तथा हि । जन्यरूपवान् कालत्वादित्यादौ जन्य-
भावानधिकरणमहाप्रलये कालिकसंबन्धावच्छिन्ना
या जन्यरूपादिनिष्ठाधेयता तदनिरूपकाधिकरणा-
त्वस्य सत्त्वात् तादृशप्रलयनिरूपितवृत्तित्वस्य का-
लत्वे सत्त्वात् महाकालत्वानुधावनम् । तथा च
महाकाले वृत्तिमन्मात्रस्यैव कालिकसंबन्धेन वृत्ति-
त्वात् न कालिकसंबन्धावच्छिन्नकिंचिन्निष्ठाधेयताया
अनिरूपकाधिकरणत्वं महाकालेऽस्तीति । न च त-
थापि कालिकसंबन्धेन यत्र वाच्यत्वस्य साध्यता ज-
न्यत्वं हेतुः तत्राधेयतायां साध्यतावच्छेदकसंब-

न्धावच्छिन्नत्वानिवेशेऽव्याप्तिरेव भवति स्वरूपसं-
बन्धावच्छिन्नवाच्यत्वनिष्ठाधेयतानिरूपकाधिकरण-
त्वस्य सर्वत्र सत्त्वात् संबन्धसामान्यावच्छिन्नवाच्य-
त्वनिष्ठाधेयत्वानिरूपकत्वस्याप्रसिद्धेः एवं महाका-
लान्यत्वस्य यत्र स्वरूपसंबन्धेन साध्यता समवायेन
घटत्वं हेतुस्तत्र कालिकसंबन्धेन महाकालान्य-
त्वस्य महाकाले सत्त्वात् स्वरूपसंबन्धेन महाका-
लान्यत्वस्य महाकालातिरिक्ते सत्त्वात् संबन्धसामा-
न्यावच्छिन्नमहाकालान्यत्वनिष्ठाधेयत्वानिरूपकाधि-
करणत्वाप्रसिद्धेस्तत्राप्यव्याप्तिसंभवेऽतिव्याप्तिपर्यन्ता-
नुधावनं जगदीशेन कथं कृतमिति वाच्यम् जगदी-
शेन हि यत्किंचित्संबन्धावच्छिन्नसाध्यनिष्ठाधेयत्वा-
निरूपकाधिकरणवृत्तित्वानधिकरणत्वं लक्षणं सं-
भवतीति निश्चितम्। तदा कालिकसंबन्धेन वा-
च्यत्वसाध्यकजन्यत्वहेतौ कालिकसंबन्धावच्छिन्न-
वाच्यत्वनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वानधि-
करणत्वस्य सत्त्वात् स्वरूपसंबन्धेन महाकालान्यत्व-
साध्यकघटत्वहेतौ च स्वरूपसंबन्धावच्छिन्नमहाका-
लान्यत्वनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वानधि-
करणत्वस्य महाकालत्वे सत्त्वात् न तत्रोभयत्रा
व्याप्तिः। रूपवान् महाकालत्वात् इत्यत्रातिव्याप्तिस्तु
प्रसज्येतैव अत आधेयतायां यत्किंचित्संबन्धावच्छि-

न्नत्त्वमनिवेश्य विशेषतः साध्यतावच्छेदकसंबन्धावच्छिन्नत्त्वस्य निवेशनमपि सफलमिति ॥ ३ ॥ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षः ॥ अथाच स्वरूपसंबन्धेन साध्यनिष्ठाधेयत्वानिरूपकत्ववद्यदधिकरणत्वं तद्व्यापकत्वं वा तादृशानिरूपकत्वव्यापकत्वं वा सामानाधिकरण्यसंबन्धेन तादृशानिरूपकत्वविशिष्टं यदधिकरणत्वं तद्व्यापकत्वं वा हेत्वधिकरणत्वाभावे निवेश्यते नाद्यः धूमादावव्याप्तेः साध्याधिकरणताभिन्नाधिकरणतामात्रस्यैव साध्यनिष्ठाधेयत्वानिरूपकत्वसत्त्वात् तादृशानिरूपकाधिकरणत्वव्यापकत्वस्य हेत्वधिकरणत्वाभावेऽप्रसिद्धेः परकल्पद्वयमपि न साधु वह्निमान् वन्ह्यधिकरणतात्वाद्वन्ह्यधिकरणत्वपर्वतान्यतरत्वाद्वित्यादावतिव्याप्तेः वह्न्यधिकरणतात्मपर्वतस्य साध्यनिष्ठाधेयतानिरूपकत्वस्य सत्त्वात्(?) इति चेन्न साध्यनिष्ठाधेयत्वाभावव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वस्य निष्कृष्टार्थस्य विवक्षितत्वात् तादृशाधेयत्वाभावस्य स्वनिरूपकत्वस्वनिरूपकाधिकरणत्वोभयसंबन्धावच्छिन्नप्रतियोगिताको बोध्य इति न कोपि दोष इति(?) ॥४॥ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियो-

व्यधिकरणतासामान्यकत्वमिति निष्कृष्टकल्पोपरि न चात्र हेतुतावच्छेदकसंबन्धेन यद्धर्मावच्छिन्नाभावत्वेन तादृशाधिकरणताव्यापकत्वमित्यस्यैव सम्यक्त्वे अधिकरणत्वाभावपर्यंतप्रवेशो ऽव्यर्थं इति वाच्यम् वृत्त्यनियामकसंबन्धेन हेतावतिप्रसङ्गात् तादृशसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः अस्माकं तु तादृशसंबन्धेन यद्धेतुसंबन्धित्वं तस्य स्वरूपसंबन्धावच्छिन्नाभावमादाय लक्षणसमन्वयसंभवादिति जगदीशः॥ अत्रेयमाशंका हेतुतावच्छेदकसंबन्धावच्छिन्नयद्धर्मावच्छिन्नाभावत्वेन व्यापकतानिवेशे साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकं हेतुतावच्छेदकसंबन्धावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वं व्याप्तिरिति पर्यवस्यति तत्र साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमवश्यं हेतुतावच्छेदकसंबन्धेन वक्तव्यम् अन्यथा वन्हिमान् धूमादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतो यो धूमावयवस्तत्र धूमाभावाभावस्य समवायेन वर्तमानत्वात्तत्प्रतियोगितावच्छेदकं धूमाभावत्वमित्यव्याप्तेः एवं च सत्तावान् जातेरित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे सामान्यादौ हेतुतावच्छेदकसंबन्धेन वृत्तित्वाप्रसिद्ध्या ऽव्याप्तिः एवं च यादृशस्थले ऽव्याप्त्या पूर्वोक्तलक्षणं परित्यज्य एतादृ-

शलक्षणं कृतं तादृशस्थल एवाव्याप्तिः सम्भवतीति
तासुपेक्ष्य कथं चैत्रत्ववान् तद्वनादित्यादिस्थलांत-
रानुधावनं कृतम् एवं द्रव्यं विशिष्टसत्त्वादित्यत्र सा-
धारनिष्ठाधेयत्वानिरूपकाधिकरणे गुणे सत्तास्वरूप-
त्रिशिष्टसत्ताभावाभावो वर्तते तत्प्रतियोगितावच्छे-
दकं विशिष्टसत्त्वाभावत्वमिति तत्राप्यव्याप्तिपरि-
हार एतादृशविवक्षायां न संभवतीति चेत्। अत्राहुः
साधारनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकताव-
च्छेदकत्वमत्र साधारनिष्ठाधेयत्वानिरूपकाधिकरणी-
भूतयत्किंचिद्व्यक्तिवृत्त्यधिकरणतानवच्छेदकं यत्तद्भि-
न्नत्वरूपं निवेशनीयम् अत्र यत्किंचिद्व्यक्तिवृत्त्यधिकर-
णता हेतुमत्ताग्रहविरोधिताघटकसंबन्धावच्छिन्ना
तथा च वह्निमान् धूमादित्यत्र च धूमावयवनिष्ठा या
स्वरूपसंबन्धावच्छिन्नाधिकरणता तदनवच्छेदक-
घटादिभिन्नत्वस्यैव संयोगसंबन्धावच्छिन्नप्रतियो-
गिताकधूमाभावत्वे सत्त्वात् लक्षणसमन्वयः एवं
द्रव्यं विशिष्टसत्त्वादित्यादौ द्रव्यत्वनिष्ठाधेयत्वा-
निरूपकाधिकरणे यो गुणः तद्वृत्तिर्या स्वरू-
पसंबन्धरूपहेतुमत्त्वग्रहविरोधिताघटकसंबन्धावच्छि-
न्नाधिकरणता तदवच्छेदकत्वस्यैव विशिष्टस-
त्ताभावत्वे सत्वात् निरुक्तव्यापकतावच्छेदक-
त्वमक्षतमेव धूमवान् वह्नेरित्यत्र धूमनिष्ठाधेय-

त्वानिरूपकाधिकरणं यद्गयोगोलकं तन्निष्ठा या स्वरूपसंबन्धरूपहेतुमत्ताग्रहविरोधिताघटकसंबन्धा-वच्छिन्नाधिकरणता तदनवच्छेदकत्वस्य वन्ह्य-भावत्वे सत्वान्न साध्यनिष्ठाधेयत्वानिरूपकाधिकर-णीभूतयत्किंचिद्व्यक्तिवृत्त्यधिकरणतानवच्छेदकभि-न्नत्वमस्तीति नातिप्रसङ्गः यत्किंचित्पदमपि अति-व्याप्तिवारणार्थमेव अन्यथात्र ह्रदनिष्ठाधिकरणता-वच्छेदकत्वस्यैव वन्ह्यभावे सत्त्वात् वन्ह्यभावत्वस्य व्यापकतावच्छेदकत्वापत्तेरिति ॥ अत्रेदं चिंत्यते द्रव्यगुणान्यतरत्ववान् कर्मत्वाभावादित्यत्र व्यभिचा-रिण्यतिव्याप्तिः तथा हि साध्यनिष्ठाधेयत्वानिरू-पकाधिकरणपदेन जात्यादिकं धर्तुं न शक्यते तन्नि-ष्ठस्यसमवायरूपहेतुमत्ताग्रहविरोधिताघटकसंबन्धा-वच्छिन्नाधिकरणत्वस्याप्रसिद्धेः यदि कर्म ध्रियते तदा समवायरूपहेतुमत्ताग्रहविरोधिताघटकसंबन्धावच्छि-न्नाधिकरणतावच्छेदकत्वस्यैव कर्मत्वाभावाभाव-त्वरूपहेत्वभावाभावत्वे सत्त्वान्निरुक्तव्यापकताव-च्छेदकत्वस्याक्षतत्वात् एतेन तादृशाधिकरणता-व्यापकत्वं न तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं किं तु तादृशाधिकरणविशिष्टान्यत्वम् वैशिष्ट्यं च स्वनि-ष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन स्व-वच्छेदकता च निरवच्छिन्नाधेयतासंबन्धेन स्वाधेयता

च हेतुमत्ताग्रहविरोधिताघटकसंबन्धेन एव सति सत्तावान् द्रव्यत्वादित्यादौ नाव्याप्तिसंभव इति नि-रस्तम् द्रव्यगुणान्यतरत्ववान् कर्मत्वाभावादित्यादा-वतिव्याप्तेः तथा हि तादृशाधेयत्वानिरूपका-धिकरणपदेन जात्यादेर्धारणं न संभवति तन्नि-ष्ठहेतुमत्ताग्रहविरोधिताघटकसंबन्धावच्छिन्नाधेय-त्वाप्रसिद्धेः किं तु तादृशाधिकरणपदेन कर्मण एव ग्रहणं तद्विशिष्टान्यत्वस्य हेत्वभावे सत्त्वादिति न च प्रतियोगिवैयधिकरण्यघटितव्यापकताया निवे-श्यत्वात् व्यापकत्वघटकतद्वन्निष्ठत्वांशे संबन्धानि-वेशस्य वैकल्यात् तन्निवेश इति वाच्यम् अव्याप्यवृ-त्तिसाध्यकव्यभिचारिण्यतिप्रसङ्गात्(?) यदि च सा-ध्यनिष्ठाधेयत्वानिरूपकाधिकरणीभूतयत्किंचिद्व्यक्ति-निष्ठाधिकरणतासामान्ये हेतुतावच्छेदकसंबन्धाव-च्छिन्नयद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वाव-च्छिन्नत्वहेतुमत्ताग्रहविरोधिताघटकसंबन्धावच्छि-न्नत्वोभयाभावः तद्धर्मभिन्नहेतुतावच्छेदकवत्त्वमे-व व्याप्तिः तथा च धूमवान् वन्हेरित्यादावयो-गोलकनिष्ठाधिकरणतासामान्ये एव विशेषणता विशेषसंबन्धावच्छिन्नत्ववन्ह्यभावत्वावच्छिन्नत्वो-भयाभावसत्त्वात्तद्धर्मपदेन वन्हित्वं धर्तुं शक्यते त-द्धर्मभिन्नो न हेतुतावच्छेदकः वन्हिमान् धूमादि-

त्यत्र तु साध्यनिष्ठाधेयत्वानिरूपकाधिकरणतायां धूमाभावत्वावच्छिन्नत्वविशेषणताविशेषरूपहेतुमत्तायद्विरोधिताघटकसंबन्धावच्छिन्नत्वयोरेव सत्त्वात् यद्धर्मपदेन धूमत्वं धर्तुं न शक्यते अधिकरणतात्वं तु निरवच्छिन्नं ग्राह्यं तेन धूमवान् वन्हेरित्यत्र संयोगेन वन्हेरव्याप्यवृत्तित्वात् अयोगोलकनिष्ठाधिकरणतायां वन्ह्यभावत्वावच्छिन्नत्वविशेषणताविशेषसंबन्धावच्छिन्नत्वयोः सत्त्वेऽपि अयोगोलकनिष्ठनिरवच्छिन्नाधिकरणतायां तादृशोभयाभावसत्त्वान्नातिव्याप्तिरित्युच्यते तदाऽस्य सामान्यपदघटितत्वेन यद्धर्मावच्छिन्नाधिकरणत्वाभावत्वेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वापेक्षया गुरुत्वेनानुत्थितेः॥ वस्तुतः साध्यनिष्ठाधेयत्वानिरूपकाधिकरणनिरूपितवृत्तितायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वं न देयम्। किं तु वन्हिमान् धूमादित्यादावव्याप्तिवारणाय हेतुनिष्ठत्वहेतुतावच्छेदकसंबन्धावच्छिन्नत्व एतदुभयाभावस्य निवेश्यत्वात् न संबन्धान्तरावच्छिन्नवृत्तित्वमादाय वन्हिमान्धूमादित्यादावव्याप्तिः। सत्तावान् द्रव्यत्वादित्यादौ समवायसंबन्धावच्छिन्नतादृशवृत्तित्वाप्रसिद्धावपि स्वरूपसंबन्धावच्छिन्नवृत्तित्वस्य तादृशत्वान्न दोषः। यद्यपि सत्तावान् समवायेन प्रमेयादित्यादौ

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणसामान्यादिनि-
रूपितनिरूपकोभयाभाववद्वृत्तित्वाप्रसिद्धेः । तथापि हे-
त्वभावाभावत्वावच्छिन्नत्वहेतुतावच्छेदकसंबन्धा-
वच्छिन्नत्वएतदुभयाभावस्य विवक्षितत्वात् सामा-
न्यादिनिरूपितवाच्यत्वत्वावच्छिन्नवृत्तितायाः प्र-
सिद्धत्वान्न कोपि दोषः ॥ परे तु साध्यनिष्ठाधेयत्वा-
निरूपकाधिकरणनिष्ठाधिकरणतानिरूपकतावच्छेद-
कीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकं
यद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वस्य विवक्षितत्वात्
अधिकरणता न संबन्धविशेषेण निवेशनीया
संयोगसंबन्धावच्छिन्नप्रतियोगिताकधूमाभावस्य सं-
योगातिरिक्तसंबन्धेन अधिकरणतानिरूपकतानव-
च्छेदकत्वात् वन्हिमान्धूमादित्यादावव्याप्तेरभावा-
त् एकसंबन्धावच्छिन्नप्रतियोगिताकाभावाभावत्व-
स्यान्यासंबन्धावच्छिन्नाधिकरणतावच्छेदकत्वास्वी-
कारात् अत एव कपालस्य समवायेन घट-
त्वावच्छिन्नवत्त्वेपि संयोगसंबन्धावच्छिन्नघटाभावा-
भावत्वावच्छिन्नवत्त्वाप्रसिद्धैव तादृश प्रमात्वा-
संभवात् संयोगादिसंबन्धेनैव तादृशघटाभावाभा-
वत्वावच्छिन्नाधिकरणतायाः पारमार्थिकत्वात् इति
केवलान्वयिग्रन्थे जगदीशेन समाहितमिति ।
तच्चिन्त्यम् ॥ ५ ॥ साध्यनिष्ठाधेयत्वानिरूपकाधि-

करणावृत्तित्वमित्यत्र सत्तावान् द्रव्यत्वादित्यादौ ता-
दृशाधिकरणनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्ना-
धेयत्वाप्रसिद्ध्याऽव्याप्तिरतो निष्कृष्टकल्प उक्तः । न-
न्वत्र हेतुतावच्छेदकसंबन्धान्यहेतुनिरूपितसंबन्धा-
न्यसंबन्धेन तादृशाधिकरणावृत्तित्वं विवक्षणीयं तथा
सति सत्तावान् द्रव्यत्वादित्यादौ तादृशसंबन्धः स्व-
रूप एव तेन संबन्धेन तादृशावृत्तित्वं वाच्यत्वादौ
प्रसिद्धम् तद्वद्भेदस्य हेतौ सत्त्वान्नाव्याप्तिसंभाव-
नापीति केचित् पूर्वपक्षंति । तन्न । सत्तादौ साध्ये
समवायेन प्रमेयत्वे हेतावव्याप्तेः । हेतुतावच्छेद-
कसंबन्धान्यहेतुनिरूपितसंबन्धान्यसंबन्धः केवलस-
मवाय एव । तेन संबन्धेन सत्तानिष्ठाधेयत्वानिरू-
पकाधिकरणं यत्सामान्यादि तन्निरूपितवृत्तित्वा-
प्रसिद्धेः । हेतुतावच्छेदकसंबन्धान्यहेतुतावच्छेदकसं-
बन्धप्रतियोगिकसंबन्धान्यसंबन्धेन वृत्तित्वोक्तौ स-
त्तावान् प्रमेयादित्यादौ तादृशसंबन्धः स्वरूप एव
तेन संबन्धेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणसा-
मान्यादिवृत्तित्वस्य प्रमेये सत्त्वादिति ध्येयम् ॥६॥ चर-
माधिकरणत्वांशस्यानतिप्रयोजनकतया दूत्यादि-
व्याख्यानं दीधितिकृता कृतम् । अथाच तद्वत्तानुक्तौ
यद्धर्मावच्छिन्नाभावः तादृशाधिकरणत्वव्यापकः त-
द्वत्त्वमित्यर्थः अत्र यद्धर्मावच्छिन्नाभावो हेतुतावच्छेद-

कसंबन्धेनैव वाच्यः अन्यथा धूमवान् वन्हेरित्यादौ स्वरूपादिसंबन्धेन वन्हित्वावच्छिन्नाभावस्यापि नादृशाधिकरणत्वव्यापकत्वादतिव्याप्तिः वृत्त्यनियामकसंबन्धेन हेतुतायां तत्संबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिः वन्ह्यादौ साध्ये संयोगेन रूपादिहेतौ तादृशसंबन्धावच्छिन्नरूपाभावस्य केवलान्वयित्वया ऽतिव्याप्तिः चरमधिकरणत्वांशस्योपदाने च हेतुतावच्छेदकसंबन्धावच्छिन्नयद्धर्मावच्छिन्नसंबन्धित्वस्य स्वरूपसंबन्धावच्छिन्नाभावस्य लक्षणघटकतया नाव्याप्तिः संयोगसंबन्धावच्छिन्नरूपत्वावच्छिन्नसंबन्धित्वाप्रसिद्ध्या नातिव्याप्तिश्चेति चेन्न । हेतुतावच्छेदकसंबन्धावच्छिन्नयद्धर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्तादृशाधेयत्वानिरूपकाधिकरणत्वं व्यापकस्तद्धर्मवत्त्वमित्यर्थकरणेऽधिकरणत्वांशस्यानतिप्रयोजनकत्वात् वृत्त्यनियामकसंबन्धेन हेतुतायां तत्संबन्धावच्छिन्नावच्छेदकत्वस्वीकारान्नाव्याप्तिः संयोगादिसंबन्धेन रूपसंबन्ध्यप्रसिद्ध्या तत्संबन्धावच्छिन्नरूपनिष्ठावच्छेदकत्वस्यालीकत्वात् नातिव्याप्तिरिति गूढाभिप्रायः ॥७॥ साध्यनधिकरणानधिकरणत्वमिति लक्षणस्य साध्यं यदधिकरणानधिकरणं तत्वाभाव इत्यर्थं इतिदीधितिः । ननु निरुक्तमूलेन तादृशार्थबोधनात् दीधितिग्रन्थासंगतिरिति चेन्न । अ-

धिकरणमत्तधिकरणं यस्येति समासेन तादृशार्थस्य लभ्यत्वात्। तथा हि। व्यासार्थो यन्निरूपिताधिकरणत्वावच्छिन्नप्रतियोगिताकभेदवदधिकरणम्। समासार्थस्तु अधिकरणनिष्ठभेदप्रतियोगितावच्छेदकाधिकरणतानिरूपकं साध्यम्। अधिकरणमनधिकरणं यस्येति साध्याधिकरणानधिकरणम अत्र व्यासार्थस्तु यन्निरूपिताधिकरणनिष्ठभेदप्रतियोगितावच्छेदकाधिकरणतानिरूपकं साध्यमिति। समासार्थस्तु साध्यनिरूपिताधिकरणत्वावच्छिन्नप्रतियोगिताकभेदाश्रयीभूताधिकरणवृत्तित्वस्याभाव इति भावप्रत्ययात्तादृशवृत्तित्वलाभः। ततो न साध्याधिकरणानधिकरणमिति नञ्तत्पुरुषः नञश्च साध्यपदोत्तरनिपातस्य भट्टाचार्येण लिखितत्वात् इति प्रथमलक्षणप्राप्तिः। साध्यस्यानधिकरणं साध्यवद्भिन्नमिति यावत् तादृशाधिकरणं आधेयतानिरूपकं यस्य ततो भावप्रत्ययात् साध्यानधिकरणवृत्तित्वलाभः ततो नञ्समासः नञ्साध्यानधिकरणपदोपात्तः इति द्वितीयार्थस्यप्राप्तिः ॥८॥ तदुभयमपीत्यादौ साध्येत्यादेः साध्यं यदधिकरणानधिकरणं तत्राभाव इति दीधितिः। अत्र जागदीशः साध्यानधिकरणेत्यादौ नञ् व्यत्ययेन चरमाधिकरत्वेन सहान्वयलाभाल्लाभ इत्याह। ननु साध्यानधिकरणानधिकरणत्वशब्देन सा-

त्वं यदधिकरणानधिकरणं तत्वाभावस्याभिधानादसत्त्वतिरिति 'वैन्नव्यमते बहुव्रीहिस्थलीविग्रहवाक्येन याद्दशार्थः प्रत्याय्यते तत्पदार्थवैपरीत्येनान्वयावगाहिबोधः समासेन जन्यते इति व्युत्पत्तेरधिकरणमनधिकरणं आधेयतानिरूपकं यस्य साध्यस्येति प्रथमं बहुव्रीहिः ततोऽधिकरणानधिकरणं यस्य इति तदुत्तरं भावप्रत्ययाच्च नञ्तत्पुरुषः नञः साध्यपदोत्तरं निपातः भट्टाचार्येण नञः साध्यनिपातस्य चापि नयेन व्युत्पत्यविरोधात् तत्प्रथमबहुव्रीहिवाक्येन यत्पदार्थे साध्यनिष्ठधेयत्वनिरूपकत्वावच्छिन्नप्रतियोगिताकभेदवदधिकरमिति बोधः समासेन तु अधिकरणनिष्ठाभावप्रतियोगितावच्छेदकीभूतनिरूपकताकाधेयतावत्साध्यमिति बोधो जन्यते द्वितीयबहुव्रीहिवाक्येन तु यत्पदोत्तरषष्ठ्यर्थस्य वृत्तितानिरूपकत्वस्याधिकरणेऽन्वयेणाभिहितोक्तप्रकार एव बोधः द्वितीयबहुव्रीहिणा तु पुनस्तत्पदार्थे नञ्व्यत्ययेन साध्यनिष्ठाधेयत्वनिरूपकत्वावच्छिन्नप्रतियोगिताकभेदवदधिकरणनिरूपितत्वं यत्पदार्थे बोध्यते भावप्रत्ययेन तादृशवृत्तित्वमात्रं नञ्तत्पुरुषेण तदभाव इति रीत्या चरमाधिकरणांशविनिर्मुक्तस्य साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वाभावरूपस्य प्रथमलक्षणार्थस्यावगतः। द्वितीय-

यत्तल्लक्षणार्थावगतिस्तु एवंरीत्या । साध्यस्यानधिकरणं साध्यानधिकरणं साध्यवद्भिन्नमिति यावत् तदेवाधिकरणमाधेयतानिरूपकं यस्येति वाक्येन यन्निष्ठाधेयतानिरूपकं साध्यवद्भिन्नमिति बोधः समासेन तु साध्यवद्भिन्ननिरूपितवृत्तित्वं यत्पदार्थे बोध्यते इति प्राचां समाधानम् ॥८॥ अत्रोत्पत्तिकालावच्छेदेन घटे पृथिवीत्वेन रूपवद्वृत्तित्वं इति प्रतीत्या पृथिवीत्वादौ रूपवद्वृत्तित्वाभावाभ्युपगमे हेत्वधिकरणनिष्ठावच्छेदकत्वं निरवच्छिन्नं ग्राह्यं तेन रूपवान् पृथिवीत्वादित्यादौ नाव्याप्तिः तत्र घटनिष्ठावच्छेदकत्वस्योत्पत्तिकालेनावच्छेदादिति ध्येयमिति जगदीशः ॥ अत्र केचिदाक्षिपन्ति हेतुतावच्छेदकसंबन्धावच्छिन्नहेत्वधिकरणावच्छेद्यसाध्योपलक्षितवृत्तित्वाभावस्यैव लक्षणे निवेश्यत्वं अन्यथा वन्हिप्रागभावे वन्हिविशिष्टनिरूपितवृत्तित्वाभावस्य सत्त्वात् वन्हिमान् वन्हिप्रागभावादित्यादावव्याप्तिस्स्यात् तथा च साध्यविशिष्टनिरूपितवृत्तित्वाभावसत्त्वेऽपि साध्योपलक्षितनिरूपितवृत्तित्वाभावविरहेण वन्हिमान् वन्हिप्रागभावादित्यादावव्याप्तिविरहात् कथं हेत्वधिकरणनिष्ठावच्छेदकतायां निरवच्छिन्नत्वं निवेशितमिति । तन्न । साध्योपलक्षितनिरूपितवृत्तित्वाभावस्य निवेशेऽपि वन्हिमान् व-

न्हिप्रागभावादित्यादावव्याप्तिवारणार्थं हेत्वधिकरणनिष्ठावच्छेदकतायां निरवच्छिन्नत्वं देयम। अन्यथा वन्ह्यधिकरणकालावच्छेदेन वन्ह्युपलक्षितनिरूपितवृत्तित्वाभावसत्वादव्याप्तिरिति ध्येयम ॥ १० ॥

इति जागदीशीस्थ सिंहव्याघ्रलक्षणविवरणटिप्पणी कालीशाङ्करी समाप्ता ॥



